विवेकशाणै र्वैराग्यशस्त्रंशातं त्वया तथा ।
यथा मोक्षेऽपि तत्साक्षादकुण्ठित पराक्रमम् ।३।
यदा मरुन्नरेन्द्र श्रीस्त्वया नाथोपभुज्यते ।
यत्रतत्र रतिर्नाम, विरक्तत्वं तदापि ते ।४।
नित्यं विरक्तः कामेभ्यो यदा योगंप्रपद्यते ।
अलमेभिरितिप्राज्यं तदा वैराग्यमस्तिते ।५।
सुखेदुःखेभवेमोक्षेयदौदासीन्यमीशिषे ।
तदा वैराग्यमेवेति कुत्र नासि विरागवान् ।६।
दुःखगर्भे मोहगर्भे वैराग्येनिष्ठिताः परे ।
ज्ञानगर्भंतुवैराग्यं त्वय्येकायनतां गतम् ।७।
औदासीन्येऽपि सततं विश्व विश्वोपकारिणे ।
नमो वैराग्यनिघ्नाय तायिने परमात्मने ।८।



## * त्रयोदश-प्रकाश *

अनाहूतसहायस्त्वं, त्वम कारणवत्सलः ।
अनभ्यर्थितसाधुस्त्वं, त्वमसम्बन्धबान्धव ।१।
अनक्तस्निग्धमनसममृजोज्ज्वलवाक्पथम् ।
अधोतामलशीलं त्वांशरण्यंशरणं श्रये ।२।

अचण्डवीरवृत्तिनाशमिना शमवर्त्तिना ।
त्वया कामम कुट्यन्त कुटिलाः कर्मकण्टकाः ।३।

अभवाय महेशायागदाय नरकच्छिदे ।
अराजसाय ब्रह्मणे कस्मैचिद्भवते नमः ।४।

अनुच्तितफलोदग्राद निपात गरीयसः ।
असङ्कल्पितकल्पद्रोस्त्वत्तःफलमवाप्नुयाम ।५।

असङ्गस्य जनेशस्यनिर्ममस्य कृपात्मनः ।
मध्यस्थस्य जगत्रातुरनङ्कस्तेऽस्मिकिङ्करः ।६।

अगोपिते रत्ननिधावबृते कल्पपादपे ।
अचिन्त्ये चिन्तारत्ने च त्वय्यात्मायंमयार्पितः ।७।

फलानुध्यानवन्ध्योऽहं, फलमात्रतनुर्भवान् ।
प्रसीद् यत्कृत्यविधौ, किंकर्तव्य जडे मयि ।८।



## * चतुर्दश-प्रकाश *

मनोवचःकायचेष्टाः कष्टाः संहृत्य सर्वथा ।
श्लथत्वेनैवभवतामनः शल्यं वियोजितम् ।१।

संयतानि न चाक्षाणि नैवोच्छृङ्खलितानि च ।
इति सम्यक्प्रतिपदा त्वयेन्द्रियजयः कृतः ।२।

योगस्याष्टाङ्गता नूनं प्रपञ्चः कथमन्यथा ।
आबालभावतोप्येप तवसात्म्यमुपेयिवान् ।३।
विपयेपुविरामस्ते, चिरंसहचरेष्वपि ।
योगे सात्म्यमदृष्टेऽपि स्वामिन्निदमलौकिकम् ।४।
तथा परेन रज्यन्ते उपकार परे परे ।
यथाऽपकारिणिभवानहो सर्वमलौकिकम् ।५।
हिंसका अप्युपकृता आश्रिता अप्युपेक्षिताः ।
इदं चित्रं चरित्रं ते के वा पर्यनुयुञ्जताम् ।६।
तथा समाधौ परमेत्वयात्माविनिवेशितः ।
सुखीदुःख्यस्मि नास्मीतियथान प्रतिपन्नवान् ।७।
ध्याताध्येयं तथा ध्यानं त्रयमेकात्मतां गतम् ।
इतिते योगमाहात्म्यं कथंश्रद्धीयतां परैः ।

—★—

* पञ्चदश-प्रकाशः *

जगज्जेत्रागुणास्त्रातरन्ये तावत्तवासताम् ।
उदात्तशान्तया जिग्येमुद्रयैव जगत्त्रयी ॥१॥
मेरुस्तृणीकृतोमोहात्पयोधिर्गोष्पदीकृतः ।
गरिष्ठेभ्यो गरिष्ठो यैःपाप्मभिस्त्वमपोहितः ॥२॥

च्युतश्चिन्तामणिः पाणेस्तेषां लब्धा सुधा मुधा ।
यैस्त्वच्छासनसर्वस्वमज्ञानैर्नात्मसात्कृतम् ॥३॥

यस्त्वय्यपि दधौ दृष्टिमुल्मुकाकारधारिणीम् ।
तमाशुशुक्षणिः साक्षादालप्यालमिदं हि वा ॥४॥

त्वच्छासनस्य साम्यं ये मन्यन्ते शासनान्तरैः ।
विषेण तुल्यं पीयूषं, तेषां हन्त हतात्मनाम् ॥५॥

अनेऽमूकाभूया सुस्ते येषां त्वयिमत्सरः ।
शुभोदर्काय वैकल्यमपिपापेषु कर्मसु ॥ ६ ॥

तेभ्यो नमोऽञ्जलिरयं तेषां तान्समुपास्महे ।
त्वच्छासनामृत रसैर्यैरात्माऽसिच्यतान्वहम् ॥७॥

भवे तस्यै नमोयस्यां तव पादनखांशवः ।
चिरं चूडामणीयन्ते ब्रूमहे किमतः परम् ॥८॥

जन्मवानस्मि धन्योऽस्मि कृतकृत्योस्मि यन्मुहुः ।
जातोऽस्मि त्वद् गुण ग्रामरामणीयकलम्पटः ॥९॥



## * षोडश-प्रकाश *

त्वन्मतामृतपानोत्थाइतःशमरसोर्मयः ।

पराणयन्तिमां नाथ ! परमानन्दसम्पदम् ॥१॥

इतश्चानादिसंस्कारमूर्च्छितो मूर्च्छयत्यलम् ।

रागोरग विषवेगो हताशः करवाणि किम् ? ॥२॥

रागाहिगरलाघ्रातोऽकार्षमत्कर्मवैशसम् ।

तद्वक्तुमप्यशक्तोऽस्मिधिङ्मेप्रच्छन्नपापताम् ॥३॥

क्षणं सक्तः क्षणं मुक्तः क्षणं क्रुद्धः क्षणं क्षमी ।

मोहाद्यैः क्रीडयैवाहं कारितः कपिचापलम् ॥४॥

प्राप्यापि तव सम्बोधिं मनोवाक्कायकर्मजैः ।

दुश्चेष्टितैर्मया नाथ ! शिरसि ज्वालितोऽनलः ।५।

त्वय्यपि त्रातरि त्रातर्यन्मोहादिमलिम्लुचैः ।

रत्नत्रयं मे ह्रियते हताशो हा हतोऽस्मि तत् ।६॥

भ्रान्तस्तीर्थानि दृष्टस्त्वं मयैकस्तेषु तारकः ।

तत्तवाङ्घ्रौ विलग्नोऽस्मि नाथ ! तारय तारय ।७।

भवत्प्रसादेनैवाहमियतीं प्रापितो भुवम् ।

औदासीन्येन नेदानीं तव युक्तमुपेक्षितुम् ।८।

ज्ञाता तात त्वमेवैकस्त्वत्तो नान्यः कृपापरः ।
नान्योमतः कृपापात्रमेधि यत्कृत्यकर्मठः ॥६॥

* सप्तदश–प्रकाशः *

स्वकृतं दुष्कृतं गर्हन् सुकृतं चानुमोदयन् ।
नाथ ! त्वच्चरणौ यामि शरणं शरणोज्झितः ॥१॥
मनोवाक्कायजे पापे कृतानुमतिकारितैः ।
मिथ्या मे दुष्कृतं भूयादपुनः क्रिययान्वितम् ॥२॥
यत्कृतं सुकृतं किंचिद्रत्नत्रितय गोचरम् ।
तत्सर्वमनुमन्येऽहं मार्गमात्रानुसार्यपि ॥ ३ ॥
सर्वेषामर्हदादीनां यो योऽर्हत्त्वादिको गुणः ।
अनुमोदयामि तं तं सर्वं तेषां महात्मनाम् ॥४॥
त्वां त्वत्फलभूतान्सिद्धांस्त्वच्छासनरतान्मुनीन् ।
त्वच्छासनं च शरणं प्रतिपन्नोऽस्मि भावतः ॥५॥
क्षमयामि सर्वान्सत्त्वान्सर्वेक्षाम्यन्तु ते मयि ।
मैत्र्यस्तु तेषु सर्वेषु त्वदेकशरणस्य मे ॥६॥
एकोऽहं नास्ति मे कश्चिन्न चाहमपि कस्यचित् ।
त्वदङ्घ्रिशरणस्थस्य मम दैन्यं न किञ्चन ॥७॥

यावन्नाप्नोमि पदवीं परां त्वदनुभावजाम् ।
तावन्मयि शरण्यत्वं मा मुञ्च शरणं श्रिते ॥८॥



## * अष्टादश-प्रकाशः *

न परं नाममृद्वेव कठोरमपि किञ्चन ।
विशेषज्ञाय विज्ञप्यं स्वामिने स्वान्तशुद्धये ॥ १ ॥
न पक्षिपशुसिंहादिवाहनासीन विग्रहः ।
न नेत्रगात्रवक्त्रादि विकार विकृताकृतिः ॥ २ ॥
न शूलचापचक्रादि शस्त्राङ्कर पल्लवः ।
नाङ्गनाकमनीयाङ्ग परिष्वङ्ग परायणः ॥ ३ ॥
न गर्हणीय चरितप्रकम्पित महाजनः ।
न प्रकोप प्रसादादिविडम्बित नरामरः ॥ ४ ॥
न जगज्जननस्थेमविनाशविहितादरः ।
न लास्य हास्य गीतादिविप्लवोपप्लुतस्थितिः ॥५॥
तदेवं सर्वदेवेभ्यस्सर्वथा त्वंविलक्षणः ।
देवत्वेन प्रतिष्ठाप्यः कथं नाम परीक्षकैः ॥ ६ ॥
अनुश्रोतः सरत्पर्णतृण काष्ठादियुक्तिमत् ।
प्रतिश्रोतः श्रयद्वस्तु कया युक्त्या प्रतीयताम् ॥ ७ ॥

अथवाऽलंमंदबुद्धि परीक्षकपरीक्षणैः ।
ममापि कृतमेतेनवैयात्येन जगत्प्रभो ॥ ८ ॥
यदेव सर्व संसारिजन्तु रूप विलक्षणम् ।
परीक्षन्तां कृतधियस्तदेव तव लक्षणम् ॥ ९ ॥
क्रोधलोभभयाक्रातं जगदस्माद्विलक्षणः ।
न गोचरोमृदुधियांवीतराग ! कथञ्चन ॥ १० ॥

—***—

## * एकोनविंशतितम्–प्रकाशः *

तव चेतसि वर्त्तेऽहमिति वार्त्तापि दुर्लभा ।
मच्चित्ते वर्त्तसे चेत्त्वमलमन्येन केनचित् ॥ १ ॥
निगृह्यकोपतः कांश्चित् कांश्चित्तुष्टयाऽनुगृह्य च ।
प्रतार्यन्ते मृदुधियः प्रलम्भन परैः परैः ॥ २ ॥
अप्रसन्नात्कथं प्राप्यं फलमेतदसंगतम् ।
चिंतामण्यादयः किं न फलन्त्यपि विचेतनाः ॥ ३ ॥
वीतराग ! सपर्यायास्तवाज्ञापालनं परम् ।
आज्ञाराद्धाविराद्धा च शिवाय च भवाय च ॥ ४ ॥
आकालमियमाज्ञा ते हेयोपादेय गोचरा ।
आश्रवः सर्वथा हेय उपादेयश्च संवरः ॥ ५ ॥

आश्रवोभवहेतुः स्यात्संवरो मोक्षकारणम्।
इतीय मार्हती मुष्टिरन्यदस्याः प्रपञ्चनम् ॥ ६ ॥
इत्याज्ञाराधनपरा अनन्ताः परिनिर्वृताः।
निर्वान्ति चान्ये क्वचनानिर्वास्यन्ति तथापरे ॥ ७ ॥
हित्वाप्रसादनादैन्यमेकयैव त्वदाज्ञया।
सर्वथैव विमुच्यन्ते जन्मिनः कर्मपञ्जरात् ॥ ८ ॥

-★-

## ❋ विंशतितम्-प्रकाशः ❋

पादपीठलुठन्मूर्ध्नि मयि पादरजस्तव।
चिरंनिवसतां पुण्यपरमाणुकणोपमम् ॥ १ ॥
मदृशौ त्वन्मुखा सक्ते, हर्षवाष्पजलोर्मिभिः।
अप्रेक्ष्यप्रेक्षणोद्भूतं क्षणात्क्षालयतांमलम् ॥२॥
त्वत्पुरोलुठनैर्भूयान्मद्भालस्य तपस्विनः।
कृतासेव्यप्रणामस्य प्रायश्चित्तं किणावलिः ॥३॥
ममत्वद्दर्शनोद्भूताश्चिरं रोमाञ्च कण्टकाः।
नुदन्तां चिरकालोत्थामसद्दर्शनवासनाम् ॥ ४ ॥
त्वद्वक्त्रकांतिज्योत्स्नासुनिर्पतासु सुधास्विव।
मदीयैर्लोचनाम्भोजैः प्राप्यतांनिर्निमेषता ॥ ५ ॥

त्वदास्यलासिनी नेत्रे त्वदुपास्तिकरौ करौ ।
त्वद्गुण श्रोतृणी श्रोत्रे भूयास्तां सर्वदा मम ॥ ६ ॥
कुण्ठापियदिसोत्कण्ठा त्वद्गुणग्रहणं प्रति ।
ममैषाभारतीतर्हि स्वस्त्ये तस्यैकिमन्यया ॥ ७ ॥
तव प्रेष्योऽस्मिदासोऽस्मि सेवकोऽस्म्यस्मिकिंकरः ।
ओमितिप्रतिपद्यस्व नाथ ! नातः परं ब्रुवे ॥ ८ ॥
श्री हेमचन्द्र प्रभवाद्वीतरागस्तवादितः ।
कुमारपालभूपालः प्राप्नोतु फलमीप्सितम् ॥ ९ ॥

—* इति विंशतितम प्रकाशः *—

—*—

## ॥ श्रीसिन्दूर प्रकरणम् ॥

(सादूर्लविक्रीडित वृत्तम्)

सिंदूर प्रकरस्तपः करि शिरः क्रोडे कषायाटवी,
दावार्चिनिचयः प्रबोध दिवस प्रारम्भ सूर्योदयः ।
मुक्ति स्त्रीकुच कुम्भकुंकंम रसः श्रेयस्तरोः पल्लव,
प्रोल्लासः क्रमयोर्नखद्युतिभरः पार्श्व प्रभोः पातु वः ।१।
सन्तः सन्तुमम प्रसन्नमनसो वाचां विचारोद्यताः ।
सूतेम्भः कमलानि तत्परिमलं वाताव्रितन्वंति यत् ।

किंनाऽभ्यर्थ नयाऽनया यदि गुणोऽस्त्यासां ततस्ते स्वयं ।
कर्तारः प्रथने न चेदथ यशः प्रत्यर्थिना तेन किम् ? ।२।

(उपजातिवृत्त)

त्रिवर्ग संसाधनमन्तरेण, पशोरिवायुर्विफलं नरस्य ।
तत्रापि धर्मं प्रवरं वदन्ति, न तं विना यद्भवतोऽर्थकामौ ।३।

(इन्द्रवज्रा छन्दः)

यः प्राप्य दुष्प्राप्यमिदं नरत्वं, धर्मं न यत्नेन करोति मूढः ।
क्लेशप्रबंधेन स लब्धमब्धौ, चिंतामणिं पातयति प्रमादात् ।४।

( मन्दाक्रान्तावृतम् )

स्वर्णस्थाले क्षिपति स रजः पादशौचं विधत्ते ।
पीयूषेण प्रवरकरिणं वाहयत्यैन्ध भारम् ।
चिन्तारत्नं विकिरति कराद्वाय सोड्डाय नावं ।
यो दुष्प्रापं गमयति मुधा, मर्त्यं जन्म प्रमत्तः ।५।

( शार्दूलविक्रीडितवृतम् )

ते धत्तूरतरुं वपन्तिभवने प्रोन्मूल्य कल्पद्रुमं ।
चिन्तारत्नमपास्य काचशकलं स्वीकुर्वते ते जडाः ।
विक्रीयद्विरदं गिरीन्द्रसदृशं, क्रीणन्ति ते रासभं ।
ये लब्धं परिहृत्य धर्ममधमा, धावन्ति भोगाशया ।६।

( शिखरिणीवृत्तम् )

अपारे संसारे कथमपि समासाद्य नृभवं ।
न धर्मं यः कुर्याद्विषयसुख तृष्णातरलितः ।
ब्रुडन् पारावारे, प्रवरमपहाय प्रवहणं ।
स मुख्यो मूर्खाणामुपलमुप लब्धुं प्रयतते ॥ ७ ॥

( शार्दूलविक्रीडित वृतम् )

भक्ति तीर्थंकरे गुरौ जिनमते संघे च हिंसानृत-
स्तेयाब्रह्म परिग्रहाद्युपरमं क्रोधाद्यरीणां जयम् ।
सौजन्यं गुणिसंगमिन्द्रियदमं दानं तपोभावनां ।
वैराग्यं च कुरुष्व निवृंतिपदे यद्यस्ति गन्तुं मनः ।८।

पापं लुम्पति दुर्गतिं दलयति, व्यापादयत्यापदं ।
पुण्यं संचिनुते श्रियं वितनुते पुष्णाति नीरोगताम् ।
सौभाग्यं विदधाति पल्लवयति, प्रीतिं प्रसूते यशः ।
स्वर्गं यच्छति निवृंत्तिं च रचय त्यर्चाऽर्हता निर्मिता ।९।

स्वर्गस्तस्य गृहाङ्गणं सहचरी साम्राज्यलक्ष्मीः शुभा ।
सौभाग्यादिगुणावलिर्विलसति, स्वैरं वपुर्वेश्मनि ।
संसारः सुतरः शिवं करतलक्रोडे लुठत्यञ्जसा ।
यः श्रद्धाभरभाजनं जिनपतेः पूजां विधत्ते जनः ।१०।

( शिखरिणीवृतम् )

कदाचिन्नातङ्कः कुपित इव पश्यत्यभिमुखं ।
विदूरे दारिद्रयं चकितमिव नश्यत्यनुदिनम् ।
विरक्ता कान्तेव त्यजति कुगतिः सङ्गमुदयो ।
न मुञ्चत्यभ्यर्णं सुहृदिव जिनार्चां रचयतः ॥११॥

( शार्दूलविक्रीडित वृतम् )

यः पुष्पैर्जिनमर्चति स्मितसुरस्त्री लोचनैः सोऽर्च्यते ।
यस्तं वंदत एकशस्त्रिजगता सोऽहर्निशं वंद्यते ।
यस्तं स्तौति परत्र वत्रदमनस्तोमेन स स्तूयते ।
यस्तं ध्यायति क्लृप्तकर्मनिधनः स ध्यायते योगिभिः ॥१२॥

( वंशस्थ वृतम् )

अवद्यमुक्ते पथि यः प्रवर्तते,
प्रवर्तयत्यन्य जनं च निःस्पृहः ।
स एव सेव्या स्वहितैपिणा गुरुः,
स्वयं तरंस्तारयितुं चमः परम् ॥१३॥

( मालिनी वृतम् )

विदलयति कुबोधं बोधयत्यागमार्थं,
सुगति-कुगतिमार्गौ, पुण्य-पापे व्यनक्ति ।

अवगमयति कृत्याकृत्यभेदं गुरुर्यो,
भवजलनिधिपोतस्तं विनानास्तिकश्चित् ॥१४॥

( शिखरिणी वृतम् )

पिता माता भ्राता प्रिय सहचरी सूनुनिवहः ।
सुहृत्स्वामी माद्यत्करिभटरथाश्वः परिकरः ।
निमज्जंतं जन्तुं नरककुहरे रक्षितुमलं ।
गुरोर्धर्माऽधर्म प्रकट न परात्कोऽपि न परः ॥१५॥

( शार्दूल विक्रीडित वृतम् )

किं ध्यानेनभवत्वशेषविषय, त्यागैस्तपोभिः कृतं ।
पूर्णं भावनयाऽलमिन्द्रियदमैः पर्याप्तमाप्तागमैः ।
किन्त्वेकंभवनाशनं कुरु गुरुप्रीत्या गुरोः शासनं ।
सर्वे येन विना विनाथवलवत् स्वार्थाय नालं गुणाः ॥१६॥

( शिखरिणी वृतम् )

न देवं नादेवं न शुभगुरुमेवं न कुगुरुं ।
न धर्मं नाधर्मं न गुणपरिणद्धं न विगुणम् ।
न कृत्यं नाकृत्यं, न हितमहितं नापि निपुणं ।
विलोकन्ते लोका जिनवचन चक्षुर्विरहिताः ॥१७॥

( शार्दूल विक्रीडित वृत्तम् )

मानुष्यं विफलं वदन्ति हृदयं व्यर्थं वृथा श्रोत्रयो ।
निर्माणं गुण-दोषभेदकलनां, तेषामसंभाविनाम् ।
दुर्वारं नरकांध कूप पतनं, मुक्तिं बुधा दुर्लभां ।
सार्वज्ञः समयो दयारसमयो, येषां न कर्णातिथि ॥१८॥

पीयूषं विषवज्जलं ज्वलनवत्तेजस्तमस्तोमवत् ।
मित्रं शात्रववत् स्त्रजं भुजगवच्चिंतामणिं लोष्टवत् ।
ज्योत्स्नां ग्रीष्मजघर्मवत् स मनुत्ते कारुण्य पण्यापणं ।
जैनेन्द्रं मतमन्यदर्शन समं, यो दुर्मतिर्मन्यते ॥१९॥

धर्म्मं जागरयत्यघं विघटयत्युत्थापयत्युत्पथं ।
भिन्ते मत्सर मुच्छिनत्ति कुनयं, मथ्नाति मिथ्यामतिम् ।
वैराग्यं वितनोति पुष्यति कृपां, मुष्णाति तृष्णां च य-
त्तज्जैनं मतमर्चति प्रथयति, ध्यायत्यधीते कृती ॥२०॥

रत्नानामिव रोहणक्षितिधरः खं तारकाणामिव ।
स्वर्गः कल्पमहीरुहामिव सरः पंकेरुहाणामिव ।
पाथोधिः पयसामिवेन्दुमहसां स्थानं गुणानामसा-
वित्यालोच्य विरच्यतां भगवतः संघस्य पूजा विधिः ॥२१॥

यः संसार निरासलालसमतिर्मुक्त्यर्थमुत्तिष्ठते ।
यं तीर्थं कथयंति पावनतया, येनाऽस्ति नान्यः समः ।
यस्मै तीर्थपतिर्नमस्यति सतां, यस्माच्छुभं जायते ।
स्फूर्त्तिर्यस्य परा वसन्ति च गुणा, यस्मिन् स-
संघोऽर्च्यताम् ॥२२॥

लक्ष्मीस्तं स्वयमभ्युपैति रभसा, कीर्तिस्तमालिंगति ।
प्रीतिस्तं भजते मतिः प्रयतते, तं लब्धुमुत्कंठया ।
स्वः श्री स्तं परिरब्धुमिच्छति, मुहुर्मुक्तिस्तमालोकते ।
यः संघं गुणराशिकेलि सदनं श्रेयो रुचिः सेवते ॥२३॥

यद्भक्तेः फलमर्हदादिपदवी मुख्यं कृषेः सस्यवत् ।
चक्रित्वं त्रिदशेन्द्रतादि तृणवत् प्रासङ्गिकं गीयते ।
शक्तिं यन्महिमस्तुतौ न दधते वाचोऽपि वाचस्पतेः ।
संघः सोऽघहरः पुनातु चरण न्यासैः सतां मंदिरम् ।२४॥

क्रीडाभूः सुकृतस्य दुष्कृतरजः संहारवात्या भवो ।
दन्वन्नौर्व्यसनाग्निमेघपटली, संकेतदूती श्रियाम् ।
निःश्रेणिस्त्रिदिवौकसः प्रियसखी मुक्तेः कुगत्यर्गला ।
सत्त्वेषु क्रियतां कृपैव भवतु क्लेशैरशेषैः परैः ॥२५॥

( शिखरिणी वृत्तम् )

यदि ग्रावा तोये तरति तरणिर्यद्युद्‌यति ।
प्रतीच्यां सप्तार्चिर्यदि, भजतिशैत्यं कथमपि ।
यदि क्ष्मापीठं स्यादुपरि सकलस्यापि जगतः ।
प्रसूते सत्त्वानां तदपि न वधः क्वाऽपि सुकृतम् ॥२६॥

( मालिनीवृत्तम् )

स कमलवनमग्ने, र्वासरं भास्वदस्ता ।
दमृतमुरगवक्त्रात्, साधुवादं विवादात् ।
रुगपगमम जीर्णा, ज्जीवितं कालकूटा ।
दभिलपति वधाद्यः, प्राणिनां धर्ममिच्छेत् ॥२७॥

( शार्दूल विक्रीडित वृत्तम् )

आयुर्दीर्घतरंवपुर्वरतरं गोत्रं गरीयस्तरं ।
वित्तंभूरितरं बलं बहुतरं, स्वामित्वमुच्चैस्तरम् ।
आरोग्यं विगतांतरं त्रिजगति श्लाघ्यत्वमल्पेतरं ।
संसारांबुनिधिकरोति सुतर, चेतः कृपार्द्रांतरम् ।२८॥

( शार्दूल विक्रीडित वृत्तम् )

विश्वासायतनं विपत्ति दलनं देवैः कृताराधनं ।
मुक्तेः पथ्यदनं जलाग्निशमनं, व्याघ्रोरगस्तंभनम् ।
श्रेयः संवननं समृद्धिजननं सौजन्य संजीवनं ।
कीर्ते केलिवनंप्रभावभवनं सत्यं वचः पावनम् ॥२९॥

( शिखरिणी वृतम् )

यशो यस्माद्भस्मीभवति वनवह्नेरिव वनं ।
निदानं दुःखानां यदवनिरूहाणां जलमिव ।
न यत्र स्याच्छायातप इव तपः संयमकथा ।
कथंचित्तन्मिथ्या वचनमभिधत्ते न मतिमान् ॥३०॥

( वंशस्थ वृतम् )

असत्यमप्रत्य मूल कारणं, कुवासनासद्म समृद्धिवारणम् ।
विपन्निदानं परवंचनोर्जितं, कृतापराधंकृतिभिर्विवर्जितम् ।३१॥

( शार्दूल विक्रीडित वृतम् )

तस्याग्निर्जलमर्णव स्थलमरिर्मित्रं सुराः किङ्कराः,
कान्तारं नगरं गिरिर्गृहमहिर्माल्यं मृगारिर्मृगः ।
पातालं विमलस्त्रमुत्पलदलं व्यालः शृगालो विषं,
पीयूषं विषमंसमं च वचनं सत्याञ्चितं वक्ति यः ॥३२॥

( मालिनी वृतम् )

तमभिलषति सिद्धिस्त वृणीते समृद्धि-
स्तमभिसरति कीर्तिर्मुञ्चते तं भवार्त्तिः ॥
स्पृहयति सुगतिस्तं नेक्षते दुर्गतिस्तं ।
परिहरति विपत्तं यो न गृह्णत्यदत्तम् ॥३३॥

( शिखरिणी वृतम् )

अदत्तं नादत्ते कृतसुकृत कामः किमपि यः ।
शुभश्रेणिस्तस्मिन् वसति कलहंसीव कमले ।

विपत्तस्माद्दूरं व्रजति रजनीवाम्बरमणे।
विनीतं विद्येव त्रिदिव-शिव-लक्ष्मीर्भजति तम् ॥३४॥

( शार्दूल विक्रीडित वृतम् )

यन्निर्वर्त्तितकीर्ति धर्मनिधनं सर्वागसां साधनं,
प्रोन्मीलद्वधबंधनं विरचितक्लिष्टाशयोद्बोधनम्।
दौर्गत्यैकनिबंधनं कृतसुगत्या श्लेष संरोधनं,
प्रोत्सर्पत्प्रधनं जिघृक्षति न तद्धीमानदत्तंधनम् ॥३५॥

( हरिणी वृतम् )

परजनमनः पीडा क्रीडावनं वध भावना—
मन्न जलवनि व्यापि व्यापल्लतावन मण्डलम्।
कुगतिगमने मार्गः स्वर्गापवर्ग पुरार्गलं,
नियतमनुपादेयं स्तेयं नृणां हितकांक्षिणाम् ॥३६॥

( शार्दूल विक्रीडित वृतम् )

कामार्त्तस्त्यजति प्रबोधयति च स्वस्त्रीं परस्त्रीं न यो,
दत्तस्तेन जगत्य कीर्ति पटहो गोत्रे मषीकूर्चक।
श्चारित्रस्य जलाञ्जलिर्गुणगणारामस्य दावानलः,
सङ्केतः सकलापदां शिवपुर द्वारे कपाटो दृढः ॥३७॥

व्याघ्रव्यालजलानलादि विपदस्तेषां व्रजन्ति क्षयं,
कल्याणानि समुल्लसन्ति विबुधाः सान्निध्यमध्यासते।
कीर्तिं स्फूर्तिमियर्त्ति यात्युपचयं धर्मः प्रणश्यत्यघं,
स्वर्निर्वाणसुखानि संनिदधते ये शीलमाबिभ्रते ॥३८॥

(मालिनी वृत्तम्)

हरति कुलकलंकं लुम्पते पापपङ्कं,
सुकृतमुपचिनोति श्लाघ्यतामातनोति।
नमयति सुरवर्गं हन्ति दुर्गोपसर्गं,
रचयति शुचिशीलं स्वर्गमोक्षौ सलीलम् ॥३९॥

( शार्दूलविक्रीडित वृत्तम् )

तोयत्यग्निरपि स्रजत्यहिरपि व्याघ्रोऽपि सारंगति,
व्यालोऽप्यश्वति पर्वतोऽप्युपलति क्ष्वेडोऽपि पीयूषति।
विघ्नोऽप्युत्सवति प्रियत्यरिरपि क्रीडातडागत्यपां-
नाथोऽपि स्वगृहत्यटव्यपि नृणां शीलप्रभावाद्ध्रुवम् ।४०।

कालुष्यं जनयन जडस्य रचयन् धर्म्मद्रुमोन्मूलनं,
क्लिश्यन्नीतिकृपाक्षमाकमलिनीर्लोभांबुद्धिवर्द्धयन्।
मर्यादातटमुद्रुजन् शुभमनोहंसप्रवासंदिशन्,
किं न क्लेशकरः परिग्रहनदीपूरः प्रवृद्धिं गतः? ॥४१॥

( मालिनी वृत्तम् )

कलहकलभविन्ध्यः क्रोधगृध्रश्मशानं,
व्यसन भुजगरन्ध्रं द्वेषदस्युप्रदोषः ।
सुकृत वनदवाग्निर्मार्दवाम्भोदवायु—
र्नयनलिन तुषारोऽत्यर्थमर्थानुरागः ॥४२॥

( शार्दूल विक्रीडित वृत्तम )

अत्यर्था प्रशमस्य मित्रमधृतेर्मोहस्य विश्रामभूः,
पापानां खनिरापदां पदमसद्ध्यानस्य लीलावनम् ।
व्याक्षेपस्य निधिर्मदस्य सचिवः शोकस्य हेतुः कलेः,
केलिवेश्म परिग्रहः परिहृतेर्योग्यो विविक्तात्मनाम् ॥४३॥

वह्निस्तृप्यति नेन्धनैरिह यथा, नाम्भोभिरम्भो निधि,
स्तद्वल्लोभघनो घनैरपि धनैर्जन्तुर्न संतुष्यति ।
नत्वेवं मनुते विमुच्य विभवं निःशेष मन्यं भवं,
यात्यात्मा तदहं मुधैव विदधाम्ये नांसि भूयांसि किम् ।४४॥

यो मित्रं मधुनो विकार करणे संत्राससंपादने,
सर्पस्य प्रतिबिम्बमङ्ग दहने, सप्तार्चिषः सोदरः ।
चैतन्यस्य निषूदने विषतरोः सब्रह्मचारी चिरं,
सो क्रोधः कुशलाभिलाप कुशलैः प्रोन्मूलमुन्मूल्यताम् ।४५।

( हरिणी वृत्तम् )

कलति कलितश्रेयः श्रेणिप्रसून परम्परः,
प्रशमपयसा सिक्तोमुक्ति तपश्चरणद्रुमः ।
यदि पुनरसौ प्रत्यासत्तिप्रकोपहविर्भुजो,
भजतिलभते भस्मीभावं तदोविफलोदयः ॥४६॥

( शार्दूल विक्रीडित वृत्तम् )

सन्तापं तनुते भिनत्ति विनय सौहार्दमुत्सादय,
त्युद्वेगं जनयत्यवद्य वचनं, सूते विधत्ते कलिम् ।
कीर्तिं कृंततिदुर्मतिं वितरति व्याहंति पुण्योदयं,
दत्ते यः कुगतिं स हातुमुचितो रोपः सदोषः सताम् ।४७।

योधर्मं दहति द्रुमं दव इवोन्मथ्नाति नीतिं लतां,
दन्तीवेन्दुकलां विधुन्तुद इव क्लिश्नाति कीर्तिं नृणाम् ।
स्वार्थं वायुरिवाम्बुदं विघटयत्युल्लासयत्या पदं,
तृष्णां धर्म इवोचितः कृत कृपालोपः स कोपः कथम् ॥४८॥

( मन्दाक्रान्ता वृत्तम् )

यस्माद्राविर्भवति वितति दुस्तरापन्नदीनां,
यस्मिञ्शिष्टाभिरुचित गुणग्राम नामाऽपि नास्ति ।

यश्च व्याप्तं वहति वधधीभूम्यया क्रोधं दावं,
तं मानाद्रिं परिहर दुरारोह मौचित्यवृत्तेः ॥४६॥

( शिखरिणी वृत्तम् )

शमालानंभंजन् विमलमतिनाडिं विघटयन्,
किरन् दुर्वाक्पांसूत्करमजयन्नागमसृणिम् ।
भ्रमन्नुर्व्यां स्वैरं विनयनयवीथिं विदलयन्,
जनः कं नानर्थं जनयतिमदांधोद्विपइव ॥५०॥

( शार्दूल विक्रीडित वृत्तम् )

औचित्याचरणं विलुम्पति पयोवाहं नभस्वानिव,
प्रध्वंसं विनयं नयत्यहिरिव प्राणस्पृशां जीवितम् ।
कीर्तिं कैरविणीं मतङ्गज इव प्रोन्मूलयत्यञ्जसा,
मानो नीच इवोपकार निकरं हंति त्रिवर्गं नृणाम् ॥५१॥

( वसन्ततिलका वृत्तम् )

मुष्णाति यः कृतसमस्त समीहितार्थम्,
संजीवनं विनय जीवितमङ्गभाजाम् ।
जात्यादिमानविषजं विषमं विकारं,
तं मार्दवामृत रसेन नयस्व शान्तिम् ॥५२॥

( मालिनी वृत्तम् )

कुशलजननवन्ध्यां सत्यसूर्यास्तसंध्याम्,
कुगति युवतिमालां मोहमातङ्गशालाम् ॥
शमकमलहिमानीं दुर्यशोराजधानीम्,
व्यसनशतसहायां दूरतोमुञ्चमायाम् ॥५३॥

( उपेन्द्रवज्रा वृत्तम् )

विधायमायां विविधैरुपायैः परस्यये वञ्चनमाचरन्ति ।
ते वंचयन्तित्रिदिवापवर्ग-सुखान्महामोह सखाः स्वमेव ॥५४॥

( इन्द्रवंशा वृत्तम् )

मायामविश्वास विलासमन्दिरं,
दुराशयो यः कुरुते धनाशया ।
सोऽनर्थ सार्थं न पतन्तमीक्षते,
यथाबिडालोलगुडं पयः पिबन् ॥५५॥

( वसन्ततिलका वृत्तम् )

मुग्धप्रतारण परायण मुज्जिहीते,
यत्पाटवंकपट लम्पट चित्तवृत्तेः ।
जीर्यत्युपप्लवमवश्यमिहाप्य कृत्वा,
नापथ्य भोजनमिवामयमायतौतत् ॥५६॥

( शार्दूल विक्रीडित वृत्तम् )

यद्दुर्गा मटवीमटन्ति विकटं क्रामन्ति देशान्तरं ।
गाहन्ते गहनं समुद्रमतनुक्लेशां कृषिं कुर्वते ॥
सेवन्ते कृपणं पतिं गजघटासंघट्टदुः संचरं ।
सर्पन्ति प्रधनंधनान्धितधियस्तल्लोभविस्फूर्जितम् ।५७।

मूलं मोहविषद्रुमस्य सुकृताम्भोराशिकुम्भोद्भवः ,
क्रोधाग्नेररणिः प्रतापतरणिप्रच्छादने तोयदः ।
क्रीडासद्म कलेर्विवेकशशिनः स्वर्भानुरापन्न दी-
सिन्धुः कीर्तिलताकलापकलभो लोभः पराभूयताम् ।५८।

( वसन्ततिलका वृत्तम् )

निःशेषधर्म वन दाह विजृम्भमाणे ,
दुःखौघभस्मनि विसर्पद कीर्ति धूमे ।
बाढ़धनेन्धन समागम दीयमाने,
लोभान्लेशलभतां लभते गुणौघः ॥५६॥

( शार्दूल विक्रीडित वृत्तम् )

जातः कल्पतरु पुरः सुरगवी, तेषां प्रविष्टा गृहं ।
चिन्तारत्नमुपस्थितं करतले, प्राप्तो निधिः सन्निधिम् ।
विश्वं वश्यमवश्यमेव सुलभाः, स्वर्गापवर्ग श्रियः ।
ये संतोषमशेषदोष दहनध्वंसाम्बुदं बिभ्रते ॥६०॥

( शिखरिणी वृत्तम् )

वरं क्षिप्तः पाणिः कुपित फणिनो वक्त्रकुहरे,
वरं झम्पापातो ज्वलदनलकुण्डे विरचितः ।
वरं प्रासप्रान्तः सपदि जठरान्तर्विनिहितो,
न जन्यं दौर्जन्यं तदपि विपदां सद्मविदुषा ॥६१॥

( वसन्ततिलका वृत्तम् )

सौजन्यमेवविदधातियशश्चयं च ,
स्वश्रेयसं च विभवं च भवक्षयं च ।
दौर्जन्यमावहसियत्कुमते तदर्थं,
धान्येऽनलं दिशसि तज्जलसेकसाध्ये ॥६२॥

( पृथ्वी वृत्तम् )

वरं विभववन्ध्यता सुजनभावभाजां नृणा ,
मसाधुचरिताज्जितान पुनरुर्जिताः संपदः ।
कृशत्वमपिशोभते सहजमायतौ सुन्दरं ,
विपाकविरसान तुश्वयथुसंभवा स्थूलता ॥६३॥

( शार्दूल विक्रीडित वृत्तम् )

न ब्रूते परदूषणं परगुणं वक्त्यल्पमप्यन्वहं,
संतोषं वहते परर्द्धिषु पराबाधासु धत्ते शुचम् ।

स्वश्लाघां न करोति नोज्भति नयं नौचित्यमुल्लंघय-
त्युक्तोऽप्य प्रियमक्षमां न रचयत्येतच्चरित्रं सताम् ॥६४॥

(शार्दूल विक्रीडित वृत्तम्)

धर्मंध्वस्तदयो यशश्च्युतनयो वित्तं प्रमतः पुमान् ।
काव्यं निष्प्रतिभस्तपः शमदमैः शून्योऽल्पमेधाः श्रुतम् ॥
वस्त्वालोकमलोचनश्चलमना ध्यानं च वांछत्य सौ ।
यः सङ्गं गुणिनां विमुच्य विमतिः कल्याणमाकांक्षति ।६५।

(हिरणी वृत्तम्)

हरति कुमतिभिन्ते मोहं करोतिविवेकितां ।
वितरतिरतिं सूते नीतिं तनोतिगुणावलिम् ॥
प्रथयति यशोधत्ते धर्मं व्यपोहति दुर्गतिं ।
जनयति नृणां किं ना भीष्टं गुणोत्तमसंगमः ॥६६॥

(शार्दूल विक्रीडित वृत्तम्)

लब्धुं बुद्धिकलापमापदमपाकर्तुं विहर्तुं पथि ।
प्राप्तुं कीर्तिमसाधुतां विधुवितुं धर्मं समासेवितुम् ॥
रोध्धुं पापविपाकमाकलयितुं स्वर्गापवर्गं श्रियं ।
चेत्त्वं चित्त समीहसे गुणवतां संगं तदङ्गीकुरु ॥६७॥

(हरिणी वृत्तम्)

हिमतिमहिमाम्भोजे चंडानिलत्युदयाम्बुदे ।
द्विरदति दया रामे क्षेमक्ष्माभृति वज्रति ॥
समिधति कुमत्यग्नौ कंदत्यनीति लतासु यः ।
किमभिलषता श्रेयः श्रेयः न निर्गुणसंगमः ।६८॥

( शार्दूल विक्रीडित वृत्तम् )

आत्मानं कुपथेन निर्गमयितुं यः शूकलाश्वायते,
कृत्याकृत्यविवेक जीवित हृतौ यः कृष्णसर्पायते ॥
यः पुण्यद्रुमखंडखंडनविधौ स्फूर्जत्कुठारायते,
तं लुप्तव्रतमुद्रमिन्द्रिय गणं जित्वा शुभंयुर्भव ॥६९॥

( शिखरिणी वृत्तम् )

प्रतिष्ठांयन्निष्ठां नयति नयनिष्ठां विघटय ।
त्यकृत्येष्वाधत्ते मतिमतपसि प्रेम तनुत्ते ॥
विवेकस्योत्सेकं विदलयति दत्ते च विपदं ।
पदं तद्दोषाणां करणनिकुरम्बं कुरु वशे ॥७०॥

( शार्दूल विक्रीडित वृत्तम् )

धत्तां मौनमगारमुज्भतु विधिप्रागल्भ्यमभ्यस्यता,
मस्त्वंतर्गणमागमश्रममुपादत्तां तपस्तप्यताम् ।

श्रेयः पुंजनिकुंजभंजन महा वातं न चेदिंद्रिय,
व्रातं जेतुमवैतिमस्मनि हुतं जानीत सर्वं ततः ॥७१॥

धर्मध्वंस धुरीणमभ्रमर सा वारीणमापत्प्रथा,
लंकर्मीणमशर्म निर्मित कला पारीणमे कान्ततः।
सर्वान्नीनमनात्मनीन मनयात्यन्तीन मिष्टे यथा,
कामीनं कुमताध्वनीनमजयन्नर्थौघम क्षेमभाक् ॥७२॥

निम्नं गच्छति निम्नगेवनितरां निद्रेव विष्कंभते,
चैतन्यंमदिरेव पुण्यति मदंधूम्येव धत्तेन्धताम्।
चापल्यं चपलेव चुम्बति दवज्वालेव तृष्णां नय,
त्युल्लासं कुलटांगनेव कमला स्वैरं परिभ्राम्यति ॥७३॥

दायादाः स्पृहयन्ति तस्करगणा मुष्णान्ति भूमिभुजो,
गृह्णन्तिच्छलमाकलय्य हुतभुम्भस्मी करोति क्षणात्।
अम्भः प्लावयति क्षितौ विनिहितं यक्षा हरन्ते हठात्,
दुर्वृत्तास्तनया नयन्ति निधनं धिग् बह्वाधीनंधनम् ।७४॥

नीचस्याऽपि चिरं चटूनि रचयन्त्यायान्ति नीचैर्नतिं,
शत्रोरप्यगुणात्मनोऽपि विदधत्युच्चै-गुणोत्कीर्तनम्।
निर्वेदंनविदन्ति किं चिदकृतज्ञस्याऽपि सेवाक्रमे,
कष्टं किं न मनस्विनोऽपि मनुजाः कुर्वन्ति वित्तार्थिनः।
॥७५॥

लक्ष्मीः सर्पति नीचमर्णवपयः संगादिवाम्भोजिनी,

संसर्गादिव कंटकाकुलपदा न क्वापि धत्ते पदम्।

चैतन्यं विषसन्निधेरिव नृणामुज्जा सयत्यं जसा,

धर्मस्थाननियोजनेन गुणिभिर्ग्राह्यं तदस्याः फलम्।।७६।।

चारित्रं चिनुते धिनोति विनयं ज्ञानंनयत्युन्नतिं,

पुष्णाति प्रशमं तपः प्रबलयत्युल्लासयत्यागमम्।

पुण्यं कंदलयत्यघं दलयति स्वर्गं ददाति क्रमात्,

निर्वाणश्रियमातनोति निहितं पात्रे पवित्रंधनम्।।७७।।

दारिद्रं न तमीक्षते न भजते दौर्भाग्यमालम्बते,

नाऽकीर्तिर्नपराभवोऽभिलषते न व्याधिरास्कंदति।

दैन्यं नाद्रियते दुनोति न दरः क्लिश्नंति नैवापदः,

पात्रेयोवितरत्यनर्थं दलनं दानं निदानं श्रियाम्।।७८।।

लक्ष्मीः कामयते मतिमृगयते कीर्तिस्तमालोकते,

प्रीतिश्चुम्बति सेवते सुभगता नीरोगताऽऽलिङ्गति।

श्रेयः संहतिरभ्युपैति वृणुते स्वर्गोपभोगस्थिति-

मुक्तिर्वाञ्छति यः प्रयच्छति पुमानुपुण्यार्थमर्थं निजम्।७६।

( मन्दाक्रान्ता वृत्तम् )

तस्यासन्नारतिरनुचरी कीर्तिरुत्कंठिता श्रीः,

स्निग्धा बुद्धिः परिचयपरा चक्रवर्तित्वऋद्धिः।

प्राणीग्रामाग्रिदिवकमला कामुकी मुक्तिसंप्रत्,
सप्तक्षेत्र्यां वपति विपुलं वित्तबीजं निजं यः ॥८०॥

( शार्दूल विक्रीडित वृत्तम् )

यत्पूर्वार्जितकर्म शैलकुलिशं यत्कामदावानल,
ज्वालाजालजलं यदुग्रकरणग्रामाहिमंत्राक्षरम् ।
यत्प्रत्यूतमः समूहदिवसं यल्लब्धिलक्ष्मी लता,
मूलं तद्द्विविधं तपः कुर्वंति वीतस्पृहः ॥८१॥

यस्माद्विघ्नपरम्परा विघटते दास्यंसुराः कुर्वते,
कामः शाम्यति दाम्यतीन्द्रिय गणः कल्याणमुत्सर्पति ।
उन्मीलन्तिमहर्द्धयः कलयति ध्वंसं चयः कर्मणां,
स्वाधीनं त्रिदिवं शिवं च भवति श्लाघ्यं तपस्तन्न किम् ।८२।

कान्तारं न यथेतरो ज्वलयितुं दक्षो दावाग्निं विना,
दावाग्निं न यथेतरः शमयितुं शक्तो विनाम्भं धरम् ।
निष्णातः पवनं विना निरसितुं नान्यो यथाम्भोधरं,
कर्मौघं तपसा विना किमपरं हर्तुं समर्थस्तथा ॥८३॥

( स्रग्धरा वृत्तम् )

संतोष स्थूलमूलः प्रशमपरिकरः स्कन्धब
पंचाक्षीरोभशाखः स्फुरदमयदलः शी

श्रद्धाम्भः-पूरसेकाद्विपुल कुलबलैश्वर्य सौन्दर्य भोगः,
स्वर्गादिप्राप्तिपुष्पः शिवसुख फलदः स्यात्तपः
पादपोऽयम् ॥८४॥

( शार्दूल विक्रीडित वृत्तम् )

नीरोगे तरुणीकटाक्षितमिव त्याग व्यपेतप्रभौ,
सेवा कष्टमिवोपरोपणमिवाम्भोज जन्मनामश्मनि ।
विष्वग्वर्षमिवोषरक्षितितले दानार्हदर्चातपः-
स्वाध्यायाध्ययनादि निष्फलमनुष्ठानं विना भावनाम् ।८५।

सर्वं झीप्सति पुण्यमिप्सति दयां धित्सत्यघं मित्सति,
क्रोधं दित्सति दानशीलतपसां साफल्यमादित्सति ।
कल्याणोपचयं चिकीर्षति भवाम्भोधेस्तट लिप्सति,
मुक्तिस्त्रीं परिरिप्सते यदि जनस्तद्भावयेद्भावनाम् ।८६।

( पृथ्वी वृत्तम् )

विवेकवनसारिणीं, प्रशमशर्म संजीवनीं,
भवार्णव महातरीं मदनदावमेघावलीम् ।
चलाक्ष मृगवागुरां गुरु कषाय शैलाशनिं,
विमुक्तिपथ वेसरीं भजतभावनां किं परैः ? ।८७॥

( शिखरिणी वृत्तम् )

धनं दत्तंवित्तं जिनवचनमभ्यस्तमखिलं,
क्रियाकांडं चंडं रचितमवनौ सुप्तमसकृत् ।
तपस्तीव्रं तप्तंचरणमगिजीर्णं चिरतरं,
न चेच्चित्ते भावस्तुषवपनवत्सर्वमफलम् ॥८८॥

( हरिणी वृत्तम् )

यदशुभरजः पाथो दृप्तेन्द्रियद्विरदांकुशं,
कुशलकुसुमोद्यानंमाद्यन्मनः कपि शृङ्खला ।
विरतिरमणीलीलावेश्मस्मरज्वरभेषजं,
शिवपथ रथस्तद्वैराग्यंविमृश्यभवाऽभयः ॥८९॥

( वसन्ततिलका वृत्तम् )

चंडानिलस्फुरित मन्दचयं दवार्चि,–
र्वृक्षव्रजं तिमिरमण्डलमर्कबिम्बम् ।
वज्रं महीध्रनिवहं नयते यथान्तं,
वैराग्यमेकमपि कर्म तथा समग्रम् ॥९०॥

( शिखरिणी वृत्तम् )

नमस्या देवानां चरणवरिवस्या शुभगुरो–
स्तपस्या निःसीमक्लमपदमुपास्या गुणवताम् ।

निषद्यारण्येस्यात् करणदम विद्या च शिवदा,

विरागःक्रूरागः क्षपणनिपुणोऽन्तः स्फुरतिचेत् ॥९१॥

( शार्दूल विक्रीडित वृत्तम )

भोगान् कृष्णभुजंग भोग विषमान् राज्यं रजः सन्निभम् ।

बन्धून्बन्धनिबन्धनानि विषयग्रामं विषान्नोपमम् ॥

भूतिभूति सहोदरां तृणमिव स्त्रैणं विदित्वा त्यजन् ।

तेष्वासक्ति मनाविलोविलभते मुक्ति विरक्तः पुमान् ॥९२॥

( उपजाति वृत्तम् )

जिनेन्द्रपूजा गुरुपर्युपास्ति, सत्त्वानुकम्पाशुभपात्रदानम् ।

गुणानुरागः श्रुतिरागमस्य, नृजन्म-वृक्षस्य फलान्यमूनि ॥९३॥

( शिखरिणी वृत्तम् )

त्रिसन्ध्यं देवार्चांविरचय चयं प्रापय यशः,

श्रियपात्रे वापं जनय नयमार्गं नय मनः ।

स्मरक्रोधाद्यारीन दलयकलय प्राणिषुदयां,

जिनोक्तं सिद्धान्तंशृणुवृणुजवान्मुक्तिकमलाम् ॥९४॥

( शार्दूल विक्रीडित वृत्तम् )

कृत्वाऽर्हत्पदपूजनंयतिजनं नत्वा विदित्वाऽऽगमम्,

हित्वा संगम धर्म कर्मठधियां पात्रेषु दत्वा धनम् ।

गत्वा पद्धतिमुत्तमक्रमजुषां जित्वान्तरारिव्रजम् ,
स्मृत्वा पंचनमस्क्रियां कुरु करक्रोडस्थमिष्टं सुखम् ।९५॥

(हरिणी वृत्तम्)

प्रसिरतियथा कीर्तिर्दिक्षु क्षपाकरसोदरा-
ऽभ्युदय जननीयातिस्फाति यथा गुण सन्ततिः।
फलयति यथा वृद्धिधर्मः कुकर्महतिक्षमः,
कुशलसुलभेन्याये कार्यं तथापथिवर्तनम् ॥९६॥

( शिखरिणी वृत्तम् )

करेश्लाघ्यस्त्यागः शिरसिगुरुपादप्रणमनं,
मुखे सत्या वाणी श्रुतमधिगतं च श्रावणयोः ।
हृदिस्वेच्छावृत्तिर्विजयिभुजयोः पौरुषमहो,
विनाप्यैश्वर्येण प्रकृतिमहतांमंडनमिदम् ॥९७॥

( शिखरिणी वृत्तम् )

भवारण्यंमुक्त्वायदि जिगमिषुर्मुक्ति नगरीं,
तदानीं माकार्षीर्विषयविषवृक्षेषु वसतिम् ।
यतश्छायाप्येषा प्रथयति महामोह मचिरा-
दयं जन्तुर्यस्मात्पदमपि न गंतु प्रभवति ॥९८॥

( उपजाति वृत्तम् )

सोमप्रभाचार्यमभा च यत्र, पुंसां तमः पंकमपाकरोति ।
तदप्यमुष्मिन्नुपदेश लेशे, निशम्यमानेऽनिशमेति नाशम् ।९९॥

( मालिनी वृत्तम् )

अभजदजित देवाचार्य पट्टोदयाद्रि-
द्युमणिविजयसिंहाचार्य पादारविंदे ।
मधुकरसमतां यस्तेन सोमप्रभेण,
व्यरचि मुनि पराज्ञा सूक्तिमुक्तावलीयम् ॥१००॥



## * प्रत्याख्यान *

### * नवकारसी *

उग्गए सूरे णमुक्कारसहियं मुट्ठिसहियं पच्चखाइ चउविहंपि आहारं असणं पाणं खाइमं साइमं अणत्थणा-भोगेणं, सहसागारेणं, महत्तरागारेणं सव्वसमाहि वत्तिया-गारेणं वोसिरइ ।

### * पोरसी—साढपोरसी *

पोरसीं साढपोरसीं मुट्ठिसहियं पच्चखाइ उग्गए सूरे चउविहंपि आहारं असणं पाणं खाइमं साइमं अणत्थणाभोगेणं सहसागारेणं पच्छन्न कालेणं दिसामोहेणं साहुवयणेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ ।

### * पुरिमुड्ड—अवड्ड *

उग्गए सूरे परिमुड्ढंअवड्ढं मुट्ठिसहियं पच्चखाइ चउविहंपि आहारं असणं पाणं खाइमं साइमं अणत्थणा-भोगेणं सहसागारेणं पच्छन्नकालेणं दिसामोहेणं साहुवयणेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ ।

### * विगइओ *

विगइओ पच्चक्खाइ अणत्थणाभोगेणं सहसागारेणं लेवालेवेणं गिहत्थ संसिट्ठेणं उक्खित्तविवेगेणं पडुच्चमक्खिएणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहि वत्तियागारेणं वोसिरइ ।

### * देसावगासिक *

देसावगासियं भोगंपरिभोगं पच्चक्खाइ अएणत्थणा-भोगेणं सहसागारेणं महत्तरागारेणं सव्वसमाहि वत्तियागारेणं वोसिरइ ।

### * एगलट्ठाण-एकासण-बियासण और दत्ति *

उग्गए सूरे णमुक्कारसीं पोरसीं साढपोरसीं वा मुट्ठि-सहियं पच्चक्खाइ चउविहंपि आहारं असणं पाणं खाइमं साइमं अएणत्थणाभोगेणं सहसागारेणं पच्छन्नकालेणं दिसा-मोहेणं साहुवयणेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं-एगलठ्ठाणं-एकासणं-बियासणं-दत्ति वा पच्चक्खाइ तिविहंपि आहारं असणं पाणं खाइमं साइमं अएणत्थणाभोगेणं सहसा-गारेणं सागारियागारेणं आउंट्टणपसारेणं गुरुअब्भुठ्ठाणेणं परिठ्ठावणियागारेणं महत्तरागारेणं सव्वसमाहि वत्तियागारेणं वोसिरइ ।

[नोट :—एकलठाणे में "आउंट्टणपसारेणं" यह पाठ नहीं कहना; तथा नोकारसी से सिर्फ बिआसणा हो सकता है, अन्य नहीं]

* निव्विगइय *

उग्गए सूरेपोरसीं साढपोरसीं मुट्ठिसहियं पच्चक्खाइ चउविहंपि आहारं असणं पाणं खाइमं साइमं अण्णत्थणाभोगेणं सहसागारेणं पच्छन्नकालेणं दिसामोहेणं साहुवयणेणं महत्तरागारेणं सव्वसमाहि वत्तियागारेणं-निव्विगइयं पच्चक्खाइ अण्णत्थणाभोगेणं सहसागारेणं लेवालेवेणं गिहत्थ संसिट्ठेणं उक्खित्तविवेगेणं पडुच्चमक्खिएणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं, एकासणं पच्चखाइ तिविहंपि आहारं असणं खाइमं साइमं अण्णत्थणाभोगेणं सहसागारेणं सागारियागारेणं आउंट्टणपसारेणं गुरुअब्भुट्ठाणेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहि वत्तियागारेण वोसिरइ ।

* आयंबिल *

उग्गए सूरे पोरसीं साढपोरसीं मुट्ठिसहियं पच्चक्खाइ चउविहंपि आहारं असणं पाणं खाइमं साइमं अण्णत्थणाभोगेणं सहसागारेणं पच्छन्नकालेणं दिसामोहेणं साहुवयणेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं — आयंबिलं पच्चक्खाइ

अण्णत्थणाभोगेणं सहसागारेणं लेवालेवेणं गिहत्थसंसिट्ठेणं उक्खित्तविवेगेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहि-वत्तियागारेणं—एकासणं पच्चक्खाइ तिविहंपि आहारं असणं खाइमं साइमं अण्णत्थणाभोगेणं सहसागारेणं सागारियागारेणं आउंटणपसारेणं गुरुअब्भुट्ठाणेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ ।

## * चौविहार-उपवास *

सूरे उग्गए अब्भत्तट्ठं पच्चक्खाइ चउविहंपि आहारं असणं पाणं खाइमं साइमं अण्णत्थणाभोगेणं सहसागारेणं पारिट्ठावणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ ।

## * तिविहार-उपवास *

सूरे उग्गएअब्भत्तट्ठं पच्चक्खाइ तिविहंपि आहारं असणं खाइमं साइमं अण्णत्थणाभोगेणं सहसागारेणं पारिट्ठा-वणियागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं—पाणहार पोरसीं साढपोरसीं पुरिमुड्ढं अवड्ढं वा मुट्ठिसहियं पच्चक्खाइ अण्णत्थणाभोगेणं सहसागारेणं पच्छन्नकालेणं दिसामोहेणं साहुवयणेणं महत्तरागारेणं सव्वसमाहिवत्तिया-गारेणं वोसिरइ ।

* पाणस्स-लेवेणवा *

पाणस्स लेवेणवा अलेवेणवा अत्थेणवा बहुलेवेणवा ससित्थेणवा असित्थेणवा वोसिरइ।

[नोट—"पाणस्सलेवेणवा" का पच्चक्खाण तथा सर्वत्र "पारिट्ठावणियागारेणं" का आगार साधुओं के लिए जानना]

* दिवसचरिमं—चौविहार *

दिवसचरिमं पच्चक्खाइ चउव्विहंपि आहारं असणं पाणं खाइमं साइमं अण्णत्थणाभोगेणं सहसागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ।

* दिवसचरिमं—दुविहार *

दिवसचरिमं पच्चक्खाइ दुविहंपि आहारं असणं खाइमं अण्णत्थणाभोगेणं सहसागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ।

* दिवसचरिमं—पाणहार *

पाणहार दिवसचरिमं पच्चक्खाइ अण्णत्थणाभोगेणं सहसागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ।

* अभिग्रहादिक *

अभिग्रहं गंठिसहियं मुट्ठिसहियं अंगुट्ठिसहियं वा

पच्चक्खाइ अण्णत्थणाभोगेणं सहस्सागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ ।

### * भवचरिमं *

भवचरिमं पच्चक्खाइ तिविहंपि आहारं चउविहंपि आहारं वा असणं पाणं खाइमं साइमं अण्णत्थणाभोगेणं सहसागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ ।



# * पच्चक्खाण पारने के पाठ *

[नवकारसी–पोरसी आदि]

नमुक्कारसहियं पोरसींमुट्ठिसहियं (आदि अमुक) पच्चक्खाणकिया चउविहार, पच्चक्खाणपुगा फासियं पालियं सोहियं तीरियं किट्टियं आराहियं जं च न आराहियं तस्स मिच्छामि दुक्कडं।

(आयंबिल-निविगय-एकलठाणा-एकासणा-बिआसणा-दत्ति-वगैरे) नवकारसीं पोरसीं साढपोरसीं आदि पच्चक्खाण किया चउविहार, आयंबिल, निविगय, एकासणो, बीयासणो, दत्ति, किया तिविहार, पच्चक्खाण पुगाफासिअं पालियं सोहियं, तीरियं, किट्टियं आराहियं जं च न आराहियं तस्स मिच्छामि दुक्कडं।

## * उपवास *

सूरे उग्गए उपवास किया तिविहार पाणाहार पोरसीं साढपोरसीं पुरिमड्ढं अवड्ढं वा पचक्खाण किया चउविहार, पचक्खाण पुगा-फासिअं पालियं सोहियं तीरियं किट्टियं आराहियं जं च न आराहियं तस्स मिच्छामि दुक्कडं।

### * पच्चक्खाणों के आगार *

दोचे वणमुक्कारे। आगारा छच्च हुंति पोरसिए। सत्तेवय पुरिमुड्ढे। एगासणेयंमि अट्ठेव ॥१॥ सत्तेगट्ठाणस्स। अट्ठेवय आयंविलंमि आगारा ॥ पंचेव अब्भत्तट्ठे। छप्पाणे चरिमं चत्तारि ॥२॥ पंच चउरो अभिग्गहे। निव्वीए अट्ठ-नवय आगारा ॥ अप्पावरणे पंचउ। हवंति सेसेसु चत्तारि ॥३॥ [नोटः—ये सब आगार गुरुसे विनाके समभना]

### * देशावगासिक पच्चक्खाण *

अहन्नंभंते ! तुह्माणं समीवे देसावगासियं पच्चक्खामि तं जहा–दव्वओ खित्तओ कालओ भावओ–दव्वओणं देसावगासियं खित्तओणं इत्थ वा अण्णच्छवा कालओणं जाव मुहुत्तधारणा पमाणे पच्चक्खामि भावओणं जावगहेणं न गहेज्जामि छलेणं न छलेज्जामि अन्नेण केणवि रोगायंकेण वा एसमे परिणामो न पडिवज्जइ ता अभिग्गह अणत्थणा-भोगेणं सहसागारेणं महत्तरागारेणं सव्वसमाहिवत्तियागारेणं वोसिरइ।

### * पोसह के पच्चक्खाण *

करेमि भंते ! पोसहं आहार पोसहं देसओ सव्वओ वा। सरीर सक्कारपोसहं सव्वओ बंभचेर पोसहं सव्वओ

अव्वावार पोसहं सव्वओ चउविहे पोसहे सावज्जं जोगं पचक्खामिजाव दिवसंवास्तं वा अहोरत्तं वा पज्जुवासामि दुविहं तिविहेणं मणेणं वायाए काएणं न करेमि न कारवेमि तस्स भंते पडिक्कमामि निंदामि गरिहामि अप्पाणं वोसिरामि ।

* चौबीस थंडिला पडिलेहण *

आगाढे आसन्ने उचारे पासवणे अणाहियासे (१) आगाढे मज्झे उचारे पासवणे अणाहियासे (२) आगाढे दूरे उच्चारे पासवणे अणाहियासे (३) आगाढे आसन्ने पासवणे अणाहियासे (४) आगाढे मद्ये पासवणे अणाहियासे (५) आगाढे दूरे पासवणे अणाहियासे (६) आगाढे आसन्ने उचारे पासवणे अहियासे (७) आगाढे मज्झे उचारे पासवणे अहियासे (८) आगाढे दूरे उचारे पासवणे अहियासे (६) आगाढे आसन्ने पासवणे अहियासे (१०) आगाढे मज्झे पासवणे अहियासे (११) आगाढे दूरे पासवणे अहियासे (१२) अणागाढे आसन्ने उचारे पासवणे अणाहियासे (१३) अणागाढे मज्जे उचारे पासवणे अणाहियासे (१४) अणागाढे दूरे उचारे पासवणे अणाहियासे (१५) अणागाढे आसन्ने पासवणे अणाहियासे (१६) अणागाढे मज्जे पासवणे अणाहियासे (१७) अणागाढे दूरे पासवणे अणाहियासे (१८) अणागाढे आसन्ने

उच्चारे पासवणे अहियासे (१६) अणागाढे मज्झे उच्चारे पासवणे अहियासे (२०) अणागाढे दूरे उच्चारे पासवणे अहियासे (२१) अणागाढे आसन्ने पासवणे अहियासे (२२) अणागाढे मज्झे पासवणे अहियासे (२३) अणागाढे दूरे पासवणे अहियासे (२४)

* राइसंथारा *

निस्सिही निस्सिही निस्सिही णमो खमासमणाणं गोयमाईणं महामुणीणं नवकार—३ तीन करेमि भंते ३ तीन बार-अणुजाणह चिठिज्जा परमगुरु । गुणगण रयणेहिं मंडिय । सरीरावहु पडिपुन्ना । पोरिसि राइसंथारए ठामि ॥ १ ॥ अणुजाणह संथारं । बाहु वहाणेणं वामपासेणं । कुक्कडपाय पसारण । अंतरंत पमज्जएभूमि ॥ २ ॥ संकोइय संडासा । उवट्टंतेय काय पडिलेहा । दव्वाई उवओगं । ऊसास निरुंभणा-लोए ॥३॥ जइमे हुज्ज पमाओ । इमस्स देहस्सिमाइ रयणीए । आहार मुवहिदेहं । सव्वं तिविहेण वोसिरियं ॥४॥ आसव-कसाय बंधण । कलहाभखाण परपरीवाउ । अरईरई पसुन्नं । मायामोसं च मिच्छत्तं ॥ ५ ॥ वोसिरिसु इमाइं । मुक्खमग्ग संसग्ग विग्घ भूयाइं ॥ दुग्गइ निबंधणाइं । अट्ठारस पावट्ठाणाइं ॥६॥ एगोहं नत्थिमे कोइ । नाहमन्नस्स कस्सवि । एवं अदीण

मणसो । अप्पाण मणुसासए ॥ ७८॥ एगोमेसासओ अप्पा । नाणदंसण संजुओ । सेसामे बाहिराभावा । सव्वे संजोग लक्खणा ॥ ८ ॥ संजोग मूला जीवेण । पत्ता दुक्खपरंपरा । तह्मा संजोग संबंधं । सव्वं तिविहेण वोसिरे ॥६॥ अरिहंतो महादेवो । जावज्जीवं सुसाहुणो गुरुणो । जिणपन्नत्तं तत्तं । इय सम्मत्तं मएगहियं ॥१०॥ चत्तारि मंगलं-अरिहंता मंगलं सिद्धा मंगलं-साहु मंगलं केवली-पन्नतोधम्मो मंगलं ॥११॥ चत्तारि लोगुत्तमा-अरिहंता लोगुत्तमा सिद्धा लोगुत्तमा । साहु लोगुत्तमा-केवली पन्नतोधम्मो लोगुत्तमा ॥१२॥ चत्तारि सरणं पवज्जामि-अरिहंतेसरणंपवज्जामि सिद्धे सरणं पवज्जामि । साहु सरणं पवज्जामि केवली पन्नत्तं धम्मं सरणं पवज्जामि ॥१३॥ अरिहंता मंगलं मज्झ । अरिहंता मज्झ देवया । अरिहंता कित्तियत्ताणं । वोसिरामित्ति पावगं ॥ १४ ॥ सिद्धाय मंगलं मज्झ । सिद्धाय मज्झ देवया । सिद्धाय कित्तियत्ताणं वोसिरामित्ति पावगं ॥ १५ ॥ आयरिया मंगलं मज्झ । आयरिया मज्झदेवया । आयरिया कित्तियत्ताणं वोसिरामित्तिपावगं ।१६। उवज्झाया मंगलं मज्झ उवज्झाया मज्झ देवया । उवज्झाया कित्तियत्ताणं । वोसिरामित्ति पावगं ॥१७॥ साहुणो मंगलं मज्झ । साहुणो मज्झ देवया । साहुणो कित्तियत्ताणं ।

वोसिरामित्ति पावगं ॥ १८ ॥ पुढवी दग अगणिमारुय। इक्केक्कि सत्तजोणि लक्खाओ। वणपत्तेय अणंते। दस चउदस जोणि लक्खाओ ॥१९॥ विगलिंदिएसु दो दो। चउरो चउरोय नारय सुरेसु। तिरिएसु हुंति चउरो। चउदस लक्खाय मणुएसु ॥२०॥ खामेमि सव्व जीवे। सव्वे जीवा-खमंतु मे। मित्ती मे सव्व भूएसु। वेरं मज्झं न केणइ॥२१॥ एवमहं आलोइअ। निंदय गरहिय दुगंच्छियं सम्मं। तिविहेणं पडि तो। वंदामि जिण चउव्वीसं ॥ २२ ॥ खमिय खमा-विय। मइखमिय सव्वह जीवनिकाय। सिद्धह साख आलो-यणह। मज्झह वेर न भाव ॥२३॥ सव्वे जीवा कम्मवस। चउदह राजभमंतु। ते मे सव्व खमाविया। मज्झवि तेह खमंतु ॥२४॥



( हिन्दी भाषा में )

### * पाक्षिक-अतिचार *

"नाणंमि दंसणंमि अ, चरणंमि तवंमि तहय विरियंमि। आयरणं आयारो। एअएसो पंचहाभणिओ" ॥१॥ ज्ञाना-चार, दर्शनाचार, चारित्राचार, तपाचार, वीर्याचार—इन पांचों आचारों में जो कोई अतिचार पक्ष दिवस में सूक्ष्म या बादर

जानते अजानते लगा हो, वह सब मन वचन काया कर मिच्छामि दुक्कडं ॥

-★-

* ज्ञानाचारे आठ अतिचार *

"काले विणए बहुमाणे, उवहाणे तहय निन्हवणे। वंजणअत्थ तदुभए, अट्ठविहो नाण मायारो ॥१॥" ज्ञान नियमित वक्त में पढ़ा नहीं। अकाल वक्त में पढ़ा। विनय रहित, बहुमान रहित, योगोपधान रहित पढ़ा। ज्ञान जिससे पढ़ा। उससे अतिरिक्त को गुरु माना या कहा। देववंदन, गुरुवंदन करते हुए तथा प्रतिक्रमण सज्भाय पढ़ते गुणते अशुद्ध अक्षर कहा। लगमात्र न्यूनाधिक कहा। सूत्र असत्य कहा, अर्थ अशुद्ध किया। अथवा सूत्र अर्थ दोनों असत्य कहे। पढ़कर भूला। असज्भाई के समय में दशवैकालिक, थविरावली प्रतिक्रमण उपदेश-माला आदि सिद्धान्त पढ़ा। अपवित्र स्थान में पढ़ा या विना साफ किये अपवित्र भूमि पर रखा। ज्ञान के उपकरण तखती, पोथी, ठवणी, कवली, माला, पुस्तक रखने की रील, कागज, कलम, दवात आदि को पैर लगा, थूक लगा अथवा थूक से अक्षर मिटाया ज्ञान के उपकरण को मस्तक के नीचे रखा, अथवा पास में लिए हुए आहार निहार

किया, ज्ञान-द्रव्य भक्षण करने वाले की उपेक्षा की, ज्ञान-द्रव्य की सार संभाल न की, उलटा नुकसान किया, ज्ञानवंत के ऊपर द्वेष किया। ईर्षा की तथा अवज्ञा आशातना की, किसी को पढ़ने गुणने में विघ्न डाला, अपने जानपने का मान किया। मति ज्ञान, श्रुत ज्ञान, अवधि ज्ञान, मनः पर्यव ज्ञान और केवल ज्ञान, इन पांचों ज्ञानों में श्रद्धा न की गूंगे तोतले की हांसी की। ज्ञान में कुतर्क की, ज्ञान की विपरीत प्ररुपणा की, इत्यादि ज्ञानाचारसंबंधी जोकोई अतिचार पक्ष दिवस में सूक्ष्म या बादर जानते अजानते लगा हो, वह सब मन वचन काया कर मिच्छामि दुक्कडं ॥



## * दर्शनाचार के आठ अतिचार *

"निस्संकिय निक्कंखिय, निव्वित्तिगिच्छा अमूढदिट्ठी अ॥ उववूह थिरीकरणे, वच्छलप्प भावणे अट्ठ।" ॥ ३ ॥

देव गुरु धर्म में निःशंक न हुआ। एकांत निश्चय न किया। धर्म सम्बन्धी फल में संदेह किया। साधु साध्वी की जुगुप्सा (नफरत) निंदा की। मिथ्यात्वियों की पूजा प्रभावना देखकर मूढ दृष्टिपना किया, कुचारित्री को देखकर चारित्र वाले पर

भी अभाव हुआ। संघ में गुणवान् की प्रशंसा न की। धर्म से पतित होते हुए जीव को स्थिर न किया। साधर्मी का हित न चाहा। भक्ति न की। अपमान किया। देव द्रव्य, ज्ञान द्रव्य, साधारण द्रव्य की हानि होते हुए उपेक्षा की। शक्ति के होते हुए भली प्रकार सार संभाल न की। साधर्मी से कलह क्लेश करके कर्म बन्धन किया। मुखकोश बांधे विना भगवत् देव की पूजा की। धूपदानी, खस, कूची, कलश आदिक से प्रतिमाजी को ठपका लगाया। जिन बिंब हाथ से छूटा। श्वासोच्छवास लेते आशातना हुई। मन्दिर तथा पौषधशाला में थूका, तथा श्लेष्म (कफ) किया, हांसी, मश्करी की, कुतूहल किया, जिन मन्दिर सम्बन्धी चौरासी आशातनाओं में से और गुरू महाराज संबंधी तेतीस आशातनाओं में से कोइ आशातना हुई हो, स्थापनाचार्य हाथ से गिरे हों, या उनकी पडिलेहण न हुई हो, गुरु के वचन को मान न दिया हो, इत्यादि दर्शनाचार सम्बन्धी जो कोई अतिचार पक्ष दिवस में सूक्ष्म या बादर जानते अजानतें लगा हों, वह सब मन वचन काया–कर मिच्छामि दुक्कडं ॥



* चारित्राचार के आठ अतिचार *

"पणिहाणजोग जुत्तो, पंचहिं समिइहिं तिहिं गुत्तिहिं ॥ ४ ॥ इर्या समिति, भाषा समिति, एषणा समिति, आदानभंडमत्तनिक्षेपणा समिति, पारिष्ठापनिका समिति, मनोगुप्ति वचन गुप्ति, काय गुप्ति, ये आठ प्रवचन माता सामायिक पौषधादिक में अच्छी तरह पाली नहीं। चरित्राचार संबंधी जो कोइ अतिचार पक्ष दिवस में सूक्ष्म या बादर जानते अजानते लगा हो, वह सब मन वचन काया कर मिच्छामि दुक्कडं ॥

विशेषतः श्रावक धर्म सम्बन्धी श्री सम्यक्त्वमूल बारह व्रत सम्यक्त्व के पांच अतिचार "संका कंखा विगिच्छा" शंका—श्री अरिहंत प्रभु के बल अतिशय ज्ञान लक्ष्मी गांभीर्यादिगुण शाश्वती प्रतिमा, चारित्रवान् के चारित्र में तथा जिनेश्वर देव के वचन में संदेह किया। आकांक्षा-ब्रह्मा, विष्णु, महेश, क्षेत्रपाल, गरुड़, गोगा, दिक्पाल, गोत्रदेव, नवग्रह पूजा गणेश, हनुमान, सुग्रीव, वाली, माता, मसानी आदिक तथा देश, नगर, ग्राम, गोत्र के जुदे जुदे देवादिकों का प्रभाव देखकर शरीर में रोगातंक कष्टादिके आने पर इसलोक पर। लोक के लिए पूजा मानता की। बौद्ध सांख्यादिक संन्यासी, भगत, लिंगिये, जोगी फकीर, पीर इत्यादि अन्य दर्शनीयों के मंत्र-यंत्र-चमत्कार को देखकर परमार्थ जाने बिना मोहित

हुआ। कुशास्त्र पढ़ा-सुना। श्राद्ध, संवत्सरी, होली, राखडी पूनम राखी, अजा एकम, प्रेतदूज, गौरी तीज, गणेश चौथ, नाग पंचमी, स्कंदषष्टि, झीलणा छठ, सील सप्तमी, दुर्गा अष्टमी, रामनौमी, विजया दशमी, व्रत एकादशी, वामनद्वादशी, वत्सद्वादशी, धनतेरस, अनंतचौदश, शिवरात्रि, कालीचउदस, अमावस्या, आदित्यवार, उत्तरायण, योग भोगादि किए कराये करते को भला माना। पीपल में पानी डाला डलवाया। कुआ, तालाब, नदी, द्रह, वावडी, समुन्द्र, कुंड ऊपर पुण्य निमित्त स्नान तथा दान किया कराया अनुमोदन किया। ग्रहण, शनिश्चर, माघमास, नवरात्रि का स्नान किया, नवरात्रि व्रत किया। अज्ञानियों के माने हुए व्रतादि किये कराये। वितिगिच्छा—धर्म सम्बन्धी फल में संदेह किया। जिन वीतराग अरिहंत भगवान, धर्म के आगार, विश्वोपकारसागर, मोक्ष मार्ग दातार, इत्यादि गुणयुक्त जानकर पूजा न की। इस लोक परलोक सम्बन्धी भोगवांछा के लिए पूजा की। रोग आतंक कष्ट के आने पर चीण वचन बोला। मानता मानी। महात्मा महासती के आहार पानी आदि की निंदा की। मिथ्या दृष्टि की पूजा प्रभावना देखकर प्रशंसा की।

प्रीति की ! दाक्षिण्यता से उसका धर्म माना मिथ्यात्व को धर्म कहा, इत्यादि श्री सम्यक्त्व व्रत सम्बन्धी जो कोई अतिचार पक्ष दिवस में सूक्ष्म या बादर जानते अजानते लगा हो, वह सब मन वचन कायाकर मिच्छामि दुक्कडं ।



# पहले स्थूल प्राणातिपात विरमण व्रत के ५ अतिचार

" वह बंधछविच्छेए "

द्विपद चतुष्पद आदि जीव को क्रोधवश ताडन किया, घाव लगाया, जकड़कर बांधा। अधिक बोझ लादा। निर्लांछन कर्म-नासिका बींधवाई, कर्ण छेदन करवाया। खस्सी नपुंसक किया। दाना-घास-पानी के समय सारवार न की, लेने देणे में किसी के बदले किसी को भूखा रखा, पास में खड़े होकर मारपीट करवाई। कैद करवाया॥ सड़े हुए धान को विना साफ किए काम में लिया। अनाज वगैर देखे पिसवाया। धूप में सुखाया। पानी यतना से न छाना इंधन, लकड़ी, उपले, गोहे आदि विना देखे वाले। उसमें सर्प, बिच्छू, कानखजूरा, कीडी मकोडी आदि जीव का नाश हुआ। किसी जीव को दबाया, दुःख दिया, दुःखी होते जीव को अच्छी जगह पर न रखा। चील, काग, कबूतर आदि के रहने की जगह का नाश किया। घोंसले तोड़े। चलते फिरते या अन्य कुछ कामकाज करते निर्दयपना किया। भली प्रकार जीव रक्षा न की। विना छाने पानी से स्नानादि कामकाज किया, कपड़े धोये। यतना पूर्वक काम-काज न किया। चार-

पाई खटोला, पीढा पीढी आदि धूप में रखे। डंडे आदि से झड़काये। जीव जन्तु वाली जमीन को लींपा। दलते, कूटते, लींपते या अन्य कुछ काम-काज करते यतना न की। अष्टमी चौदस आदि तिथि का नियम तोड़ा, धूनी करवाई, इत्यादि पहले स्थूल प्राणातिपात् विरमणव्रत सम्बन्धी जो कोई अति-चार पक्ष दिवस में सूक्ष्म या बादर जानते अजानते लगा हो, वह सब मन वचन काया कर मिच्छामि दुक्कडं ॥

—★—

## दूसरे स्थूलमृषावादविरमण व्रत के पांच अतिचार

"सहस्सा रहस्स दारे ० "

सहसात्कार बिना विचारे एकदम किसी को अयोग्य आल (कलंक) दिया। स्वस्त्री संबंधी गुप्त बात प्रगट किया। किसी को दुःखी करने के लिए खोटी सलाह दी। झूठा लेख लिखा। झूठी साक्षी दी। अमानत में खयानत की। किसी की धरोड़ वस्तु पीछी न दी। कन्या, गौ, भूमि सम्बन्धी लेन देन में लड़ते-झगड़ते वाद विवाद में मोटा झूठ बोला, हाथ-पैर आदि की गाली दी, इत्यादि स्थूल मृषावाद विरमण व्रत सम्बन्धी जो कोई अतिचार पक्ष दिवस में सूक्ष्म या बादर जानते

अजानते लगा हो, वह सब मन वचन कायाकर मिच्छामि दुक्कडं ।



## तृतीय स्थूल अदत्तादानविरमणव्रत के ५ अतिचार

"तेनाहडप्पओगे०"

घर बाहिर, खेत, खलों में, विना मालिक के भेजे वस्तु ग्रहण की; अथवा विना आज्ञा अपने काम में ली । चौरी की वस्तु ली, चौर को सहायता दी । राज्य विरुद्ध कर्म किया ॥ अच्छी; बुरी, सजीव, निर्जीव, नई, पुरानी वस्तु मिलाकर मेल संभेल किया । जकात की चौरी की । लेते देते तराजू की डंडी चढ़ाई । अथवा देते हुए कमती दिया । लेते हुए अधिक लिया । रिश्वत खाई । विश्वासघात किया ।ठगी की । हिसाब किताब में किसी को धोखा दिया । माता, पिता, पुत्र, मित्र, स्त्री आदिकों के साथ ठगी कर किसी को दिया । अथवा पूंजी अलहदी रखी । अमानत रखी हुई वस्तुसे इन्कार किया॥ किसी को हिसाब किताब में ठगा । पड़ी हुई चीज उठाई,

इत्यादि स्थूल अदत्तादानविरमण व्रत सम्बन्धी जो कोई अति-चार पक्ष दिवस में सूक्ष्म या बादर जानते अजानते लगा हो वह सब मन वचन कायाकर मिच्छामि दुक्कडं ॥

卐

## चौथे स्वदारा संतोष परस्त्रीगमन विरमण व्रत के पांच अतिचार

"अप्परिग्गहियाइत्तर०"

परस्त्री गमन किया। अविवाहिता कुमारी, विधवा वेश्या आदिक से गमन किया। अनंगक्रीड़ा की। काम आदि की विशेष जाग्रति की। अभिलाषा से सराग वचन कहा। अष्टमी चौदस आदि पर्व तिथि का नियम तोड़ा। स्त्री के अंगोपांग देखे तीव्र अभिलाषा की। कुविकल्प चितवन किया। पराये नाते जोड़े। गुड्डे गुड्डियों का विवाह किया। कलेवा कराया। अतिक्रम, व्यतिक्रम, अतिचार, अनाचार स्वप्नांतरे हुआ। कुस्वप्न आया। स्त्री, नट, विट, भांड, वेश्यादिक से हास्य किया। स्वस्त्री में संतोष न किया, इत्यादि स्वदारा संतोष परस्त्रीगमन विरमण व्रत सम्बन्धी जो कोई अतिचार पक्ष दिवस में सूक्ष्म या बादर जानते अजानते लगा हो,

वह सब मन वचन कायाकर मिच्छामि दुक्कडं ।

—*—

## पंचमें स्थूल परिग्रह परिमाणव्रत के पांचा अतिचार

"धण धन्नखित्तवत्थू०"

धन, धान्य, क्षेत्र, वास्तु, सोना, चांदी, वर्तन आदि द्विपद–दास, दासी, नौकर, चतुष्पद–गौ, बैल, घोड़ादि नव प्रकारे परिग्रह का नियम न लिया । लेकर बढाया अथवा अधिक देखकर मूर्छावश माता पिता पुत्र स्त्री के नाम किया ॥ परिग्रह का परिमाण किया नहीं । करके भुलाया । याद न किया । इत्यादि स्थूल परिग्रहण परिमाण व्रत सम्बन्धी जो कोई अतिचार पक्ष दिवस में सूक्ष्म या बादर जानते अजानते लगा हो वह सब मन वचन कायाकर मिच्छामि दुक्कडं ॥

—*—

## छट्ठे दिक् परिमाण व्रत के पांच अतिचार

"गमणस्सउपरिमाणे"

ऊर्ध्वदिशि, अधोदिशि, तिर्यग्दिशि जाने आने के निय-

मित प्रमाण उपरांत भूल से गया। नियम तोडा। प्रमाण उपरांत सांसारिक कार्य के लिए अन्य देश से (स्थान से) वस्तु मंगवाई, अपने पास से वहां भेजी। नौका जहाज आदि द्वारा व्यापार किया। वर्षा काल में एक ग्राम से दूसरे ग्राम में गया। एक दिशा के प्रमाण को कम करके दूसरी दिशा में अधिक गया। इत्यादि छट्ठे दिकपरिमाण व्रत सम्बन्धी जो कोई अतिचार पक्ष दिवस में सूक्ष्म या बादर जानते अजानते लगा हो, वह सब मन वचन काया कर मिच्छामि दुक्कडं॥

—※—

## सातमें भोगोपभोग व्रत के भोजन आश्रित पांच और कर्म आश्रित पंद्रा अतिचार

"सच्चित्ते पडिबद्धे"

सचित्त खानपान की वस्तु नियम से अधिक अंगीकार की। सचित्त से मिली हुई वस्तु खाई। तुच्छ औषधि का भक्षण किया। अपक्व आहार दुपक्व आहार किया। कोमल इमली, बूंट, भुट्टे, फलियां आदि वस्तु खाई—" सचित्त १ द्रव्व २ विगई ३, वाणह ४ तंबोल ५ वत्थ ६ कुसुमेसु ७

बाहण ८ सयण ६ विलेवण १०, बंभ ११ दिसि १२ न्हाण १३ भत्तेसु १४ " ॥४॥ यह चौदह नियम लिए नहीं। लेकर भूले। वड़–पीपल, पिलखण, कठु'बर, गूलर, ये पांच फल मदिरा, मांस, शहद, मक्खन, ये चार महा विगई, बरफ, ओले, कच्ची मिट्टी, रात्रि भोजन, बहुबीजा-फल, अचार, घोल-बड़े-द्विदल बैंगण, तुच्छफल, अजानाफल, चलितरस, अनंत-काय, ये बाईस अभक्ष्य, चूरन-जमीकंद, कच्ची हलदी, सता–वरी, कच्चा कचूर, अदरक, कुवांर पाठा, थोर गिलोह, लसन गाजर, गड्डा-प्याज, गांगलु, कोमलफल फूल, पत्र, थेगी, हरा मोत्था, अमृत वेल, मूली पदबहेडा, आलु, कचालु, रतालु, पिंडालु, आदि अनंत काय का भक्षण किया। दिवस अस्त होते हुए भोजन किया। सूर्योदय से पहले भोजन किया। तथा कार्मतः पंद्रह कर्मादान इंगालकम्मे, वणकम्मे, साडीकम्मे, भाड़ीकम्मे, फोडीकम्मे, ये पांच कर्म। दंतवाणिज्ज, लक्ख-वाणिज्ज, रसवाणिज्ज, केसवाणिज्ज, विसवाणिज्ज ये पांच वाणिज्ज। जंत पिल्लण कम्म, निल्लंछनकम्म, दवग्गिदाव-णिया, सरदहतलावसोरुणया, असइपोरुणया, ये पांच सामा-न्य, एवं कुल कर्मादान महा आरम्भ किए, कराये, करते को अच्छा समझा। श्वान, बिल्ली आदि पोपे पाले। महासावद्य

पापकारी कठोर काम किया। इत्यादि सातमे भोगोपभोग व्रत सम्बन्धी जो कोई अतिचार पक्ष दिवस में सूक्ष्म या बादर जानते अजानते लगा हो, वह सब मन वचन कायाकर मिच्छामि दुक्कडं ॥



## आठमे अनर्थदंड के पांचा अतिचार

"कंदप्पेकुक्कुइए०"

कंदर्प-कामाधीन होकर नट, विट, वेश्या, आदिक से हास्य-खेल क्रीडा कुतूहल किया। स्त्री पुरुष के हावभाव, रूप शृंगार सम्बन्धी वार्ता की। विषयरस पोषक कथा की। स्त्री कथा, देशकथा, भक्तकथा, राजकथा, ये चार विकथाएं की। पराइ भांजघड़ की। किसीकी चुगलखोरी की। आर्त्तध्यान, रौद्र-ध्यान ध्याया। खांडा, कटार, कशि, कुहाडी, रथ, उखल, मूसल, अग्नि, चक्की, आदिक वस्तु दाक्षिण्यता वश से किसी को मांगी दी। पापोपदेश दिया। अष्टमी-चतुर्दशी के दिन दलने पीसने का नियम तोड़ा। मूर्खता से असम्बद्ध वाक्य बोला। प्रमादाचरण सेवन किया। घी तेल, दूध, दही, गुड,

